












# सोमज्योतिः


श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य
त्रैमासिकं वार्तापत्रम् – अङ्कः ३६

ख्रैस्ताब्दः २०२३ – वैक्रमाब्दः २०७९ – अङ्कः ३६ – ०१ अप्रैल – जून २०२३


## सम्पादकीयम्



राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा 'ए+' श्रेणीं सम्प्राप्य उत्तरोत्तरम् अभिवर्धमानेनामुना विश्वविद्यालयेन विश्वविद्यालयानुदानायोगस्य तथा अच गुजरातसर्वकारस्य निर्देशालोके छात्रान् उद्दिश्य विंशत्युत्तरविंशे वर्षे (२०२०) समागतां राष्ट्रियशिक्षानीतिमनुसृत्य चतुर्वर्षीयः शास्त्रिपाठ्यक्रमः समारब्धः। अमुष्मिन् पाठ्यक्रमे संस्कृतशास्त्रैः सह अपरेऽपि आधुनिकविषयाः बहुविषयकत्वमादधानाः विषयाः, क्षमताभिवर्धकाः, कौशलाभिवर्धमानविषयाः, नैतिकमूल्यसम्बद्धाश्च विषयाः अन्तर्भूताः सन्ति। यस्मात् छात्राणां सर्वाङ्गीणविकासः नूनं भवतीति विश्वसिमः। लोकोपकाराय सामाजिकैः सम्पर्कं सम्पादनाय च विश्वविद्यालयद्वारा परामर्शकेन्द्रं प्रचाल्यते। तेन वेरावलनगरे आयोजितेषु सामूहिकलग्नेषु पौरोहित्यकर्म विहितम्।

अस्मिन्नेव क्रमे श्रीमद्भिः प्रधानमन्त्रिभिः श्रीनरेन्द्रदामोदरमोदिवर्यैः सङ्कल्पितस्य सौराष्ट्रतमिळसङ्गमस्य निर्बाधतया आयोजनेऽपि विश्वविद्यालयस्य महती भूमिका आसीत्। कार्यक्रमेऽस्मिन् गुजरातराज्यस्य विविधशाखासु कार्यरतैः मन्त्रिभिः आगुजरातं विद्यमानविश्वविद्यालयैः सह अत्रस्थाः अधिकारिणः अध्यापकाः कर्मचारिणः छात्राश्च अहर्निशं सेवमानाः सहभागितां प्रदत्तवन्तः। अपि च अयं सङ्गमः चिरञ्जीवी भूयात् इति धिया विश्वविद्यालयसम्बद्धैः कविभिः "सौराष्ट्र-तमिळसङ्गमप्रशस्तिः" इति ग्रन्थरत्नस्य रचना कृता। यस्य लोकार्पणं माननीयाः यशस्विनः प्रधानमन्त्रिणः श्रीमन्तः नरेन्द्रमोदिवर्याः अकार्षुः। एतेन सह विश्वविद्यालयेन सम्पूर्णगुर्जरराज्ये संस्कृतस्य प्रचार-प्रसारकार्यक्रमः समायोजितः। यस्मिन् संस्कृतज्ञानपरम्परायाः परिचयेन सह संस्कृतक्षेत्रे विद्यमान-उद्योगावसराश्च व्यापकतया ज्ञापिताः। इत्थं प्रवर्धमानोऽयं विश्वविद्यालयः भगवतः श्रीसोमनाथस्य अनुकम्पया अग्रेसरेदिति प्रार्थयमानोऽहं मम लेखनीमत्रैवावसादयामि अन्ते च कामये –

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्॥



## कुलपतेः दैनन्दिनी

| क्रमः | दिनाङ्कः | विवरणम् |
|---|---|---|
| १. | १.४.२३ | कार्यकारिपरिषदः गोष्ठ्याम् भातीगणरमतोत्सवस्य उद्घाटने च वार्षिकोत्सवस्य सांस्कृतिककार्यक्रमे उपस्थितिः। Millets भोजनोत्सवे प्रतिभागित्वम्। |
| २. | ३.४.२३ | सौराष्ट्रतमिळसङ्गमान्तर्गततया पत्रकारैः सह वार्त्ता। सुधर्मायां वीडियो माध्यमेन उच्चशिक्षणमन्त्रालयस्य अधिकारिभिः सह चर्चायाम् उपस्थितिः। |
| ३. | ३.४.२३ | UGC MOOC कृते आयोजितगोष्ठ्याः आध्यक्ष्यम्। |
| ४. | ४.४.२३ | छारोडीनगरे 'श्रीदर्शनम्' संस्कृतमहाविद्यालये महाविद्यालयानां प्राचार्याणाम् आयोजितगोष्ठ्याम् उपस्थितिः। |
| ५. | ५.४.२३ | सङ्कायाध्यक्षाणां विश्वविद्यालयस्य आचार्याणाञ्च आयोजितगोष्ठ्याः आध्यक्ष्यम्। |
| ६. | ५.४.२३ | दूरस्थशिक्षणस्य गोष्ठ्याः अध्यक्षता। |
| ७. | १०.४.२३ | सौराष्ट्रतमिळसङ्गमान्तर्गततया पत्रकारैः सह वार्त्ता। सुधर्मायां वीडियो माध्यमेन उच्चशिक्षणमन्त्रालयस्य अधिकारिभिः सह चर्चायाम् उपस्थितिश्च। |
| ८. | १२.४.२३ | अहमदाबादनगरे गुजरातविश्वविद्यालये JBVC गोष्ठ्याः आध्यक्ष्यम्। |
| ९. | १४.४.२३ | गुजरातराज्यस्य उच्चशिक्षणमन्त्रालयस्य मन्त्रिणाम् आध्यक्ष्ये सुधर्मायां सौराष्ट्रतमिळसङ्गमोत्सवान्तर्गतायाम् अन्यविश्वविद्यालयस्य कुलपतिभिः अधिकारिभिः सह कृतायां चर्चायाम् उपस्थितिः। |
| १०. | १६.४.२३ | सौराष्ट्रतमिळसङ्गमोत्सवान्तर्गतायां गुजरातस्य माननीयशिक्षणमन्त्रिणां श्रीऋषिकेशभाईपटेलवर्याणाम् उपस्थितौ आयोजितायां गोष्ठ्याम् उपस्थितिः। |
| ११. | १७तः२६.४.२३ | सौराष्ट्रतमिळसङ्गमस्य उद्घाटनसमानपकार्यक्रमयोः उपस्थितिः, प्रथम-दिनात् आरभ्य सर्वेषु दिनेषु आगतानाम् अभ्यागतानां स्वागताय प्रातः रेलयानस्थानकगमनम्, आनुषङ्गिकव्यवस्थायाः निरीक्षणम्, प्रातः ११.३० वादने परिचयसत्रे उपस्थितिः, सायं ०३.३० वादने परिसंवादे उपस्थितिः, कार्यक्रमस्य आवश्यकतानुसारं सहयोगः प्रतिदिनं सहभागिता च। |
| १२. | २६.४.२३ | परीक्षायाः मूल्याङ्कनाय समागतानाम् आचार्याणां गोष्ठ्याः आध्यक्ष्यम्। |
| १३. | २६.४.२३ | DD News तः समागतेभ्यः श्रीमनीष वाजपेयीवर्येभ्यः विश्वविद्यालयस्य परिचयप्रदानाम्, विश्वविद्यालये आयोजितानां विविधगतिविधीनां विविरणप्रदानञ्च। |
| १४. | २८तः२९.४.२३ | श्रीजगन्नाथसंस्कृतविश्वविद्यालये पुर्याम् आयोजितकार्यक्रमे उपस्थितिः। |
| १५. | १.५.२३ | विद्यावारिधिपाठ्यक्रमस्य उद्घाटनसत्रस्य आध्यक्ष्यम्, व्याख्यानप्रदानञ्च। |
| १६. | ५.५.२३ | तिरुपतिविद्यापीठस्य उत्कर्षमहोत्सवे कुलपतीनां कुलपतिचराणाम् आचार्याणाम् अधिकारिणाञ्च गोष्ठ्यां मुख्यातिथित्वेनोपस्थितिः। |
| १७. | १०.५.२३ | GTU द्वारा परिसरे आयोजितशिबिरस्य समापनसत्रे उपस्थितिः एवं विद्या-वारिधिपाठ्यक्रमस्य समापनसत्रस्य आध्यक्ष्यम्, व्याख्यानप्रदानञ्च। |
| १८. | ११.५.२३ | Anti-Ragging Comity इत्यस्य गोष्ठ्याः अध्यक्षता। |
| १९. | ११.५.२३ | शोधच्छात्राणां RDC गोष्ठ्यामुपस्थितिः। |


सोमज्योतिः

प्रधानसम्पादकः

**प्रो. (डॉ.) ललितकुमार पटेलः**

प्रभारी कुलपतिः

प्रकाशकः

**डॉ. दशरथ जादवः**

कुलसचिवः

सम्पादकाः

**डॉ. जानकीशरण आचार्यः**

**डॉ. विदुषी बोल्ला**

**श्री दिलीपः त्रिवेदी**

प्रबन्धसम्पादकः

**श्री रविन्द्र काले,** ग्रन्थपालः

News/Reports of events are invited for their publication in **SOMAJYOTIḤ** (Quarterly Newsletter of Shree Somnath Sanskrit University) from affiliated colleges, recognized study centers & approved research centers of Shree Somnath Sanskrit University in Sanskrit, Hindi or English.

News/Reports of events can be sent on following mail/postal address:

**Address:** **The Editor**
"SOMAJYOTIḤ"
Shree Somnath Sanskrit University
Rajendra Bhuvan Road, Veraval,
Dist. Gir-Somnath,
Gujarat–362 266.
(O) 02876-244532

**E-mail:** editor.somjyoti@gmail.com

श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य जालपुटेऽपि ''सोमज्योतिः'' द्रष्टुं शक्यते–
www.sssu.ac.in

Statement about the ownership and other particulars about newspapers
**SOMAJYOTI**
FORM IV
(See Rule 8 under Section 5 of the Press and Registration of Book Act,1867)

1. Place of the Publication : Shree Somnath Sanskrit University Veraval, Gujarat – 362266
2. Periodicity of its Publication : Quarterly
3. Printer's Name : Zenith Graphic
   Nationality : Indian
   Address : 1st Floor, Vraj Plaza, Jain Derasar Road, Veraval, Gujarat-362266
4. Publisher's Name : The Registrar
   Nationality : Indian
   Address : Shree Somnath Sanskrit University Rajendra Bhuvan Road, Veraval, Dist. Gir-Somnath, Gujarat–362266
5. Editor's Name : Dr. Lalitkumar patel
   Nationality : Indian
   Address : Shree Somnath Sanskrit University Rajendra Bhuvan Road, Veraval, Dist. Gir-Somnath, Gujarat–362266
6. Names & Addresses of Individuals who own the newspaper and partners or shareholders holding more than one percent of the total capital : Shree Somnath Sanskrit University Rajendra Bhuvan Road, Veraval, Dist. Gir-Somnath, Gujarat–362266

I, Dr. Dashrath Jadav, Registrar , Shree Somnath Sanskrit University, Veraval, Gujarat hereby declare that the particulars given above are true to the best of my knowledge and belief.

Dr. Dashrath Jadav
Signature of Publisher

| | | |
|---|---|---|
| २०. | ११.५.२३ | निःशुल्कभोजनव्यावस्थाविषये आभासीयरीत्या आयोजितकार्यकारि परिषदः गोष्ठ्यामुपस्थितिः। |
| २१. | १५.५.२३ | सौराष्ट्रप्रान्तस्य संस्कृतभारत्या परिसरे आयोजितशिक्षकप्रशिक्षणवर्गस्य उद्घाटनसत्रस्य अध्यक्षता। |
| २२. | १६.५.२३ | आभासीयरीत्या संस्कृतविषयाणाम् अभ्याससमितेः गोष्ठ्यामुपस्थितिः। |
| २३. | १७.५.२३ | GTU द्वारा परिसरे आयोजितनाट्यशिबिरस्य समापनसत्रस्य आध्यक्ष्यम्। |
| २४. | १७.५.२३ | कम्युनिटी होल, वेरावले श्रीजगदीशभाई फोफण्डी महोदयानां सम्मानसमारोहे उपस्थितिः। |
| २५. | १८.५.२३ | संशोधनसमितेः गोष्ठ्यामध्यक्षरूपेणोपस्थितिः। |
| २६. | १९.५.२३ | भाषा-उद्बोधनवर्गस्य उद्घाटनसत्रे उपस्थितिः। |
| २७. | २३.५.२३ | प्रकाशनसमितेः गोष्ठ्यामुपस्थितिः। |
| २८. | २६.५.२३ | विश्वविद्यालयस्य विषये माननीयशिक्षणमन्त्रिभिः श्रीऋषिकेश पटेलवर्यैः सह गोष्ठी। |
| २९. | २.६.२३ | अभिनवसङ्काध्यक्षरूपेण सङ्कायस्य गोष्ठ्यामुपस्थितिः। |
| ३०. | २.६.२३ | साहित्यसङ्कायस्य गोष्ठ्यामुपस्थितिः। |
| ३१. | २.६.२३ | छात्रावाससमितेः गोष्ठ्यामुपस्थितिः। |
| ३२. | ३.६.२३ | चतुश्चत्वारिंशत्तमविद्यापरिषदः गोष्ठ्याः आध्यक्ष्यम्। |
| ३३. | ३.६.२३ | भवननिर्माणसमितेः गोष्ठ्यामुपस्थितिः। |
| ३४. | ५.६.२३ | वित्तसमितेः गोष्ठ्यामुपस्थितिः। |
| ३५. | ५.६.२३ | वृक्षारोपणकार्यक्रमे प्रतिभागिता। |
| ३६. | ६.६.२३ | अतिथिगृहस्य सेवकस्य कृते आयोजितसाक्षात्कारे उपस्थितिः। |
| ३७. | ६.६.२३ | गृहपतेः साक्षात्कारे उपस्थितिः। |
| ३८. | ९.६.२३ | साञ्ची-बौद्ध-भारतीयज्ञानाध्ययनविश्वविद्यालये शैक्षणिकपदानां कृते आयोजितसाक्षात्कारे सभ्यत्वेनोपस्थितिः। |
| ३९. | १०.६.२३ | निमधाग्रामस्य सौराष्ट्रप्रान्तस्य संस्कृतभारत्याः अभ्यासवर्गेषु उपस्थितिः। |
| ४०. | १२.६.२३ | विश्वविद्यालयस्य विविधशाखासु आयोजितसाक्षात्कारे उपस्थितिः। |
| ४१. | १३.६.२३ | विश्वविद्यालयस्य विविधशाखासु आयोजितसाक्षात्कारे उपस्थितिः। |
| ४२. | १४.६.२३ | नवाशीतितमायाः कार्यकारिपरिषदः गोष्ठ्याः अध्यक्षता। |
| ४३. | १६.६.२३ | इन्फिनिटी सोफ्टवेर इत्यस्य परीक्षायाः विषये शैक्षणिककर्मचारिभिः चर्चा। |
| ४४. | १६.६.२३ | गुरुगोविन्दविश्वविद्यालयः, गोधरा इत्यनेन सह आभासीयरीत्या एम. ओ. यू. विषये आयोजित- गोष्ठ्याम् उपस्थितिः। |
| ४५. | १९.६.२३ | गुजरातसाहित्य-अकादमीद्वारा गान्धिनगरे आयोजिते आषाढस्य प्रथमदिवसे इति कार्यक्रमे उपस्थितिः। तथा च शिक्षणमन्त्रिभ्यां श्रीऋषिकेशपटेलवर्येण श्रीप्रफुल्लभाई पानसेरियावर्येण च सह मेलनम्। |
| ४६. | २१.६.२३ | अन्ताराष्ट्रिययोगदिवसमुपलक्ष्य आयोजिते कार्यक्रमे उपस्थितिः आध्यक्षीयोद्बोधनञ्च। |
| ४७. | २२.६.२३ | एकदिवसीयकार्यदक्षताविषयककार्यशालायामुपस्थितिः मार्गदर्शनप्रदानञ्च। |
| ४८. | २६.६.२३ | श्रीगुरुगोविन्दविश्वविद्यालयः, गोधरा इत्यनेन सह संस्कृतसंरक्षणाय संवर्धनाय च एम॰ओ॰यू॰ विषये चर्चा तथा च चतुर्थपदवीदानसमारोहे उपस्थितिः। |
| ४९. | २७.६.२३ | षाण्मासिकविद्यावारिधिप्रतिवेदनसत्रे उपस्थितिः। |
| ५०. | २८.६.२३ | षाण्मासिकविद्यावारिधिप्रतिवेदनसत्रे उपस्थितिः। |
| ५१. | ३०.६.२३ | श्रीमती-मणिबेन-कोटक-हाइस्कूल, वेरावले नहेरु-युवा-केन्द्रम्, जूनागढम् तथा सरकारी-विज्ञान-कोलेज, वेरावलम् इत्यनयोः संयुक्तोपक्रमे गीर-सोमनाथस्य विविधस्पर्धानां विजेतॄणां प्रतिभागिनां सम्माननसमारोहे अतिथिविशेषत्वेनो पस्थितिः। |
| ५२. | ३०.६.२३ | वेरावलस्थप्रमुखैः नागरिकैः सह संस्कृतसम्भाषणवर्गाणाम् आयोजनविषये आयोजितगोष्ठ्याः अध्यक्षता। |

## IQAC द्वारा समायोजिता कार्यदक्षताविषयकी एकदिवसीया कार्यशाला

श्रीसोमनाथसंस्कृतविश्वविद्यालयद्वारा दि. २२-०६-२०२३ तमे परिसरस्थकर्मचारिणामध्यापकानां कृते कार्यदक्षता इति विषयमादाय एकदिवसात्मिका कार्यशाला श्रीसोमनाथ-संस्कृतविश्वविद्यालयपरिसरे समायोजिता आसीत्। विश्वविद्यालयस्य “बृहस्पतिः” ग्रन्थालयभवने उपर्युक्ते दिनाङ्के प्रातः १०:३० वादने अस्याः उद्घाटनं प्रावर्तत। अस्मिन् उद्घाटनकार्यक्रमे श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य प्रभारिकुलपतिः प्रो. (डॉ.) ललितकुमारपटेलमहाभागः आध्यक्षं निरवहत् एवं कुलसचिवः डॉ. दशरथजादवमहाभागः स्वागतकर्तारूपेण उपस्थितः आसीत्। कार्यशालायामस्यां विषयविशेषज्ञरूपेण सरदारपटेलविश्वविद्यालयस्य आचार्य-चरः डॉ. एन. आर. पटेलमहोदयः तथा च प्रसिद्धप्रेरकप्रवक्ता श्रीशैलेषः सगपरीयामहोदयः उपस्थितः आसीत्। आदौ श्रीसोमनाथसंस्कृत-विश्वविद्यालयस्य संशोधनाधिकारी एवञ्च IQAC संयोजकः डॉ. कार्तिकपण्ड्या उपस्थितानां सर्वेषां स्वागतं कृतवान् एवञ्च



विश्वविद्यालयस्य प्रभारिकुलपतिः प्रो.ललितकुमारपटेलमहोदयः कार्यशालायाः प्रास्ताविकम् उक्तवान्।

कार्यालयक्रियाकलापेषु एवञ्च शैक्षणिकक्रियाकलापेषु कथं कार्यदक्षता प्राप्तुं शक्यते तदर्थं “Service with Smile” इति विषयमादाय श्रीशैलेषसगपरीयामहोदयेन उत्तमरीत्या मार्गदर्शनं प्रदत्तम्। “Mission for Vision-CCC” विषयमिममादाय डॉ.एन.आर.पटेलमहोदयेन सम्यक् मार्गदर्शनं विहितम्। अस्याः कार्यशालायाः समापनं सायं ०५:३० वादने अवर्तत। श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य प्रभारिकुलपतिः प्रो. (डॉ.) ललितकुमारपटेलमहाभागः आध्यक्ष्यं निरवहत्। अस्यां कार्यशालायाम् Service with smile, Mission for Vision-CCC, CAS Promotions as per UGC Regulations, 2018, University Admission & Examination System, University Administration, Use of Library, उत्तमः अध्यापकः उत्तमः कर्मचारी च इति विषये आहत्य ०७ व्याख्यानानि सञ्जातानि। कार्यशालायाः संयोजकौ विश्वविद्यालयस्य संशोधनाधिकारी डॉ. कार्तिकपण्ड्या ग्रन्थपालः श्रीरवीन्द्रः काले चास्ताम्।

## सौराष्ट्र-तमिल-सङ्गमे अतिथीनाम् आगमनम्

भारतसर्वकारेण सङ्कल्पित-सौराष्ट्र-तमिल-सङ्गम-कार्यक्रमान्तर्गतत्वेन उच्चशिक्षणविभागः, गान्धीनगरम् एवं श्रीसोमनाथसंस्कृतविश्वविद्यालय इत्यनयोः संयोगेन कार्यक्रमस्य सुचारु आयोजनाय सञ्चालनाय च विविधसमितयः प्रकल्पिताः आसन्। तदन्तर्गतान्यतमा समितिः स्वागतसमितिः। अस्याः समित्या अध्यक्षरूपेण माननीयकुलपतिभिः डॉ. उमा महेश्वरी बी. महोदया एवञ्च चत्वारः सदस्याः प्रस्थापिता आसन्। एषा समितिः मान्यानां उच्चशिक्षणाधिकारिणां, मान्यकुलपतीनां, मान्य-कुलसचिवानाञ्च मार्गदर्शने १७/०४/२०२३ तः १७/०४/२०२३ पर्यन्तं प्रतिदिनं प्रातः सप्तवादनं यावत् रेलवेस्थानकं प्राप्य तमिलराज्यतः समागम्यमानेभ्यः पूर्वसौराष्ट्रवासिभ्यः भारतीयपरिवेशे सस्वरवेदमन्त्रोच्चारणेन सह तिलकेन पुष्पगुच्छेन च सानन्दं सोत्साहं वणक्कं इत्यादि तमिलशब्दैः वैभवपूर्णं स्वागतं विधातुं सङ्कल्पिता। तदनुसारमेव विश्वविद्यालयस्य अधिकारिणः छात्राश्च प्रतिदिनं नवनवोद्भूतोत्साहेन स्वागतसत्कारादिकं विहितम्। सर्वेषाम् उत्साहवर्धनाय प्रतिदिनं विभिन्नाः केन्द्रमन्त्रिणः, गुजरातराज्यस्य मन्त्रिणः, तमिलराज्यस्य मन्त्रिणः, विविधराज्यानां राज्यपालाः कुलपतयश्च समागत्य सौराष्ट्र-तमिलजनेभ्यः स्वागतं समाचरिताः। स्वागतकार्यक्रमेऽस्मिन् सोमनाथसंस्कृतविश्वविद्यालयस्य छात्राणां पारम्परिकवेशभूषां सस्वरवेदमन्त्रोच्चारणञ्च दृष्ट्वा श्रुत्वा च सर्वेऽपि महानुभावाः विश्वविद्यालयस्य यशः गाथां गीतवन्तः। कार्यक्रमेणानेन मनुष्येषु कश्चन नूतनोत्साहः, राज्यं प्रति देशं प्रति च पूज्यभावः गौरवभावश्च अनुभूत आसीत्। कार्यक्रमस्यास्य दर्शनं क्वचित् चित्रेषु वीक्ष्यामः।



## सौराष्ट्र-तमिलसङ्गमम् इति कार्यक्रमे Interaction with Leaders एवं च शैक्षणिकसङ्गोष्ठी इत्यनयोः आयोजनम्

भारतसर्वकार-नवदेहली एवञ्च गुजरातसर्वकार-गान्धीनगर इत्यनयोः संयुक्तोपक्रमेण समायोजितस्य सौराष्ट्र-तमिल-सङ्गमम् इति कार्यक्रमस्य उद्घाटनसमारोहः १७-०४-२०२३ तमे दिनाङ्के प्रातः ११.०० वादने सोमनाथमन्दिरपार्श्वे प्रदर्शिनीस्थले आयोजितः दिनाङ्क १८-०४-२०२३ तः २५-०४-२०२३ यावत् प्रतिदिनं प्रातः ११.०० वादने विभिन्नमन्त्रिमहोदयानां समुपस्थितौ Interaction with Leaders संवादः सङ्गोष्ठीकक्षे आयोजित आसीत्। तस्मिन्नेव स्थाने मध्याह्ने ०३.०० वादने शैक्षणिकसङ्गोष्ठ्याः आयोजनमपि जातमासीत्। प्रतिदिनं तयोः कार्यक्रमयोः मञ्चसञ्चालनं श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य प्रतिनिधिरूपेण संशोधनाधिकारी डॉ. कार्तिकः पण्ड्या अकरोत्।

## सौराष्ट्र-तमिलसङ्गमकार्यक्रमे विश्वविद्यालयस्य प्रदर्शिनी

सौराष्ट्र-तमिल-सङ्गमकार्यक्रमान्तर्गते 'एकं भारतं श्रेष्ठं भारतम्' इति प्रधानमन्त्रिणः मूलमन्त्रम् उररीकृत्य श्रीसोमनाथसंस्कृत-विश्वविद्यालयेन सोमनाथे द्वारकायां च "संस्कृत-प्रदर्शिनी" आयोजिता आसीत्। यत्र देशस्य विविधाः महानुभावाः आगत्य प्रदर्शिनीं दृष्टवन्तः। अस्यां प्रदर्शिन्यां विश्वविद्यालयपाठ्यक्रमाणां विवरणं, परिसरे विद्यार्थिनां जीवनम्, परिसरे विद्यार्थिनां कृते सौविध्यं, माननीयप्रधानमन्त्रिणा श्रीमता नरेन्द्रमोदिमहाभागेन विश्वविद्यालयस्य कृते प्रदत्तः सन्देशः इत्यादिविषयाः अस्यां प्रदर्शिन्यां प्रदर्शिताः आसन्। एतेन सह विश्वविद्यालये SSIP इति योजनान्तर्गतम् आर्थिकसाहाय्यं प्राप्तः "भारतीयरसायनशास्त्रम्" इति प्रकल्पः अपि प्रदर्शितः आसीत्। अपि च यज्ञसाधनानां प्रदर्शनं जनानां कृते अत्यन्तं रोचकम् आसीत्। संस्कृतसाहित्ये मातृकालेखनपरम्परा अतीव महत्त्वशालिनी अस्ति। संस्कृतसाहित्ये कथं ग्रन्थानां लेखनपरम्परा आसीत् इति प्रदर्शयितुं लिपिकारः अपि अस्यां प्रदर्शिन्याम् उपविश्य प्राचीनरीत्या लेखनकौशलं प्रादर्शयत्। विश्वविद्यालयस्य इयं प्रदर्शिनी अत्र आगतैः सर्वैः भृशं प्रशंसिता आसीत्। एतस्यां प्रदर्शिन्यां प्रतिदिनं विश्वविद्यालयस्य प्राध्यापकाः आगतेभ्यः संस्कृतवाङ्मये निहितज्ञानराशेः विवरणं दत्तवन्तः।

एतस्यां प्रदर्शिन्यां भावनगरराज्यस्य युवराजः श्रीजयवीरराजसिंहः गोहिलः, माननीयः मन्त्रीमहोदयः श्रीकनुभाई देसाई वर्यः, माननीयः शिक्षणमन्त्री श्रीऋषिकेशपटेल-महोदयः, माननीयमन्त्री श्रीमुळुभाई बेरा वर्यः, तलाला-विधानसभासदस्यः माननीयः श्रीभगवानभाई बारडमहोदयः, माननीयः केन्द्रीयमन्त्री श्री जी. किशन रेड्डी महोदयः, सोमनाथन्यासस्य प्रबन्धकः श्रीविजयसिंह-चावडावर्यः, गुजरात-साहित्य-अकादमी-गान्धिनगरस्य कुलसचिवः डॉ. जयेन्द्रसिंह जादवः, माननीयः केन्द्रीयमन्त्री श्री पीयूषगोयल-वर्यः, माननीयः शिक्षणमन्त्री श्रीप्रफुलपानशेरीयावर्य्यः इत्याद्याः महानुभावाः आगतवन्तः।



## तमिळगुजरातीसाहित्यसंवादः एवं सांस्कृतिककार्यक्रमः

श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम् एवं गुजरातसाहित्य-अकादमी, गाँधिनगरम् इत्येतयोः संयुक्तोपक्रमे 25/04/2023 तमे दिनाङ्के मङ्गलवासरे सायं ०४ वादने श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य परिसरे पातञ्जलयोगभवनस्य सभागृहे सौराष्ट्रतमिळसङ्गमकार्यक्रमान्तर्गततया तमिळगुजरातीसाहित्यसंवादः सांस्कृतिककार्यक्रमश्च समायोजितः। अस्मिन् कार्यक्रमे वक्तारौ आस्ताम् - डॉ॰ मनोजजोषीमहोदयः, सौराष्ट्रविश्वविद्यालयः, राजकोटनगरम् तथा MBA विभागस्य आचार्यः डॉ॰ असीरवथममहोदयः, मद्रासविश्वविद्यालयसंलग्न-अक्षयआर्ट्स एवं सायन्स कोलेज, सेंगपट्टना। अस्य कार्यक्रमस्य आध्यक्ष्यं निरूढवन्तः मान्याः विश्वविद्यालयस्य कुलपतयः प्रो॰ ललितकुमारपटेलवर्याः, एतेषां प्रासङ्गिकोद्बोधनमभूत्। तथा च विश्वविद्यालयस्य कुलसचिवैः डॉ॰ दशरथजादवमहोदयैः धन्यवादज्ञापनमकारि। वेरावलनगरस्य महिलामहाविद्यालस्य अध्यापकः डॉ॰ जिवाभाईवाळामहोदयः अपि उपस्थितः आसीत्। अस्य कार्यक्रमस्य संयोजकौ - साहित्यविभागस्य डॉ॰ जिगरभट्टमहोदयः डॉ॰ जे॰डी॰ मुङ्गरामहोदयश्च आस्ताम्। अस्मिन् कार्यक्रमे विश्वविद्यालयस्य सर्वे अध्यापकाः, प्राचार्यः, कर्मचारिणः, शोधार्थिनः, विद्यार्थिनः वेरावलस्थमहाविद्यालयानाम् आचार्याः अध्यापकाश्च भागमगृह्णन्।



## सूर्यनमस्कारकार्यक्रमः

श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य योगविभागः राष्ट्रियसेवायोजना चेत्येतयोः संयुक्तोपक्रमे 17/06/2023 तमे दिनाङ्के प्रातः पादोन-अष्टवादनतः नववादनपर्यन्तं सूर्यनमस्कारकार्यक्रमः समायोजितः। अस्य कार्यक्रमस्य अभ्यासकः आसीत् - राष्ट्रियसेवायोजनायाः सहायकाचार्यः डॉ॰ जे॰डी॰मुङ्गरामहोदयः। अस्मिन् कार्यक्रमे कुलपतयः कुलसचिवाः अधिकारिणः आचार्याः कर्मचारिणः छात्राश्च उत्साहेन भागमगृह्णन्।



## अन्ताराष्ट्रिययोगदिवसस्य आयोजनम्

योगविभागः राष्ट्रियसेवायोजना चेत्येतयोः संयुक्ततत्त्वावधाने २१/०६/२०२३ तमे दिनाङ्के नवमम् अन्ताराष्ट्रिययोगदिवस-मुपलक्ष्य श्रीसोमनाथसंस्कृतविश्वविद्यालये कुलपतिर्याणा-माध्यक्ष्ये सामूहिकयोगाभ्यासः समायोजितः। कार्यक्रमेऽस्मिन् कुलपतिः, कुलसचिवः, अधिकारिणः तत्तद्विभागाध्यक्षाः आचार्याः कर्मचारिणः छात्राः भारतविकासपरिषदः सभ्याः राष्ट्रियस्वयंसेवकसङ्घस्य कार्यकर्त्तारः वेरावलस्य नागरिकाश्च भागं सोढवन्तः। एवञ्च डॉ॰ जे॰डी॰मुङ्गरामहोदयः अभ्यासकत्वेन कार्यं कृतवान्। अस्य कार्यक्रमस्य संयोजकाश्च आसन् - डॉ॰ जे॰डी॰मुङ्गरामहोदयः, श्रीमती दृष्टिबेन बारैयामहाभागा, सुश्रीधरमबेन कचोटवर्या च। एतस्य आयोजनात् पूर्वं १५-०६-२०२३ आरम्भ्य २०-०६-२०२३ पर्यन्तं योगविभागेन विश्वविद्यालये योगशिबिरस्य आयोजनम् अकारि यत्र विश्वविद्यालयस्य छात्राः, अध्यापकाः, अधिकारिणः च भागं गृहीतवन्तः।



## आषाढस्य प्रथमदिवसे कार्यक्रमः

महाकविकालिदासजयन्त्याः अवसरे श्रीसोमनाथसंस्कृतविश्व-विद्यालये अध्यापकैः शोधच्छात्रैश्च सम्भूय मेघदूतस्य (पूर्वमेघस्य) पारायणं कृतम्। डॉ. जिगरभट्टः, डॉ. रामकुमारी, श्री ऋषभः देरासरी च पारायणं कारितवन्तः। अन्ते प्राचार्येण डॉ. नरेन्द्रकुमारपण्ड्यावर्येण कृतज्ञताज्ञापनं कृतम्। कार्यक्रमस्य आयोजनं माननीयस्य प्रभारिकुलपतिवर्यस्य प्रो. ललितकुमारपटेलस्य प्रेरणया साहित्यविभागेन कृतम्।"





## विश्वपर्यावरणदिवसमुपलक्ष्य वृक्षारोपणकार्यक्रमः

श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य राष्ट्रियसेवायोजना तथा पर्यावरणसमितिः इत्यनयोः सहकारेण 05/06/2023 तमे दिनाङ्के विश्वपर्यावरणदिवसमुपलक्ष्य वृक्षारोपणकार्यक्रमः आचरितः। अस्मिन् कार्यक्रमे मान्यः कुलपतिः प्रो॰ ललितकुमारपटेलवर्यः, कुलसचिवः डॉ॰ दशरथजादववर्यः एच॰के॰कोमर्समहाविद्यालयस्य प्राचार्यः डॉ॰ आशिषदवेवर्यः विश्वविद्यालयस्य अधिकारिणः कर्मचारिणश्च विद्यमानाः आसन्। अस्मिन् प्रसङ्गे विश्वविद्यालये कार्यरतां त्रयाणां विश्वविद्यालयस्य उद्यानसंरक्षाणां सम्माननमपि विहितम्।












## विद्यावारिधिशोधचर्चासमितिः

विश्वविद्यालयानुदानायोगस्य नियमानुसारं श्रीसोमनाथसंस्कृत-विश्वविद्यालयेन २०२२-२०२३ इति शैक्षणिकवर्षस्य कृते विद्यावारिधिप्रवेशपरीक्षायाः आयोजनं कृतम्। विद्यावारिधि-प्रवेशपरीक्षार्थं ७८ शोधार्थिनः पञ्जीकरणं कृतवन्तः । तेषां १८ शोधार्थिनः उत्तीर्णाः जाताः। शोधार्थिनां कृते विद्यावारिधि-कार्यशालायाः (Ph.D Course Work) आयोजनं ०१-०५-२०२३ तः १०-०५-२०२३ यावत् परिसरे जातम्। तत्र १८ शोधार्थिनः उपस्थिताः आसन् । तदनन्तरं तेषां १८ शोधार्थिनां कृते विद्यावारिधिशोधचर्चासमितेः (Research Discussion Committee of Ph.D.) आयोजनं ११-०५-२०२३ दिनाङ्के



परिसरे कृतम्। श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य प्रभारि-कुलपतिः अनुस्नातकविभागाध्यक्षश्च प्रो. (डॉ.) ललितकुमारपटेल-महाभागः विद्यावारिधिशोधचर्चासमितेः आध्यक्षं निरवहत्। हेमचन्द्राचार्य - उत्तरगुजरात - विश्वविद्यालयस्य संस्कृत-विभागाध्यक्षः प्रो. देवसिंहराठवा विषयनिष्णातरूपेण उपस्थितः आसीत्। श्रीसोमनाथसंस्कृतविश्वविद्यालयसञ्चालितमहा-विद्यालयस्य प्रधानाचार्यः डॉ. नरेन्द्रकुमारः पण्डया उपस्थितः आसीत्। विद्यावारिधिशोधचर्चासमितेः संयोजनं सभ्यसचिव-रूपेण संशोधनाधिकारी डॉ. कार्तिकपण्डया अकरोत् तथा च सहायकरूपेण कु.खुश्बुराजपोपट कार्यमकरोत् ।

## शिक्षकेभ्यः प्रशिक्षणवर्गस्य भाषाबोधनवर्गस्य च आयोजनम्

२०/०५/२०२३ तमे दिनाङ्के श्रीसोमनाथसंस्कृतविश्वविद्यालये संस्कृतभारतीसंस्थया सौराष्ट्रप्रान्तस्य शिक्षकेभ्यः प्रशिक्षणवर्गस्य भाषाबोधनवर्गस्य च उद्घाटनकार्यक्रमः समायोजितः। अस्मिन् कार्यक्रमे विश्वविद्यालयस्य कुलपतयः प्रो. ललितकुमारपटेलवर्याः, संस्कृतभारत्याः सौराष्ट्रप्रान्तस्य मन्त्रिणः श्रीपङ्कजभाई त्रिवेदिवर्याः, अतिथिविशेषरूपेण मान्याः श्रीमानसिंहभाई



परमारमहोदयाः, संस्कृतभारत्याः उपाध्यक्षाः श्रीभक्तनरसिंह-महेताविश्वविद्यालयस्य कुलपतयः डॉ. चेतनभाई त्रिवेदिवर्याः, विश्वविद्यालयस्य कुलसचिवाः डॉ. दशरथदजादववर्याश्च उपस्थिताः आसन्। एतादृशेन संस्कृतवर्गायोजनेन संस्कृतक्षेत्रे गुणवत्तायाः आधानं भवतीति सर्वे महानुभावाः हर्षं व्यक्तवन्तः। अस्य सत्रस्य आभारविधिः गीर-सोमनाथजनपदस्य संयोजकेन डॉ. डी. एम. मोकरियावर्येणाकारि। एवञ्च अस्य सत्रस्य सञ्चालकः आसीत् - श्रीदिलीपभाई त्रिवेदिमहोदयः। २६/०५/२०२३ तमे दिनाङ्के श्रीसोमनाथसंस्कृतविश्वविद्यालये संस्कृतभारतीसंस्थया सौराष्ट्रप्रान्तस्य शिक्षकेभ्यः प्रशिक्षणवर्गस्य भाषाबोधनवर्गस्य च सम्पूर्तिसमारोहे तलाळाप्रान्तस्य विधानसभायाः धारासभ्याः श्रीभगवानभाई बारडवर्याः, वेरावलपाटणसंयुक्तनगरपालिकायाः प्रमुखाः श्रीपीयूषभाई फोफण्डीवर्याः, गीर-सोमनाथजनपदस्य भाजपप्रमुखाः श्रीमहेन्द्रभाई पिठीयावर्याः सहमन्त्रिणः श्रीदिलीपभाई बारडवर्याः, श्रीजवेरीभाई ठकरारमहोदयाः, संस्कृतभारत्याः उपाध्यक्षाः श्रीभक्तकविनरसिंह- महेता-विश्वविद्यालयस्य कुलपतयः डॉ. चेतनभाई त्रिवेदिवर्याः, संस्कृतभारत्याः सौराष्ट्रप्रान्तस्य मन्त्रिणः श्रीपङ्कजभाई त्रिवेदिवर्याः, श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य कुलसचिवाः डॉ. दशरथदजादववर्याः, विश्वविद्यालयसञ्चालितमहा-विद्यालयस्य प्राचार्याः डॉ. नरेन्द्रकुमारपण्ड्यावर्याः समुपस्थिताः आसन्। मञ्चस्थैः महानुभावैः संस्कृतभारत्याः संस्कृतभाषायाः संरक्षणाय संवर्धनाय च प्रकल्पितवर्गाः सर्वेभ्यः संस्कृताध्यापकेभ्यः उपकारकाः भवन्ति इति मोदितवन्तः। अस्य कार्यक्रमस्य शाब्दिकस्वागतं श्रीधर्मेन्द्रभाई मेमकियावर्येण तथा च आभारविधिः गीर-सोमनाथजनपदस्य संयोजकेन डॉ॰ डी. एम. मोकरियावर्येणाकारि। एवञ्च अस्य समापनसत्रस्य सञ्चालकः आसीत् - श्रीदिलीपभाई त्रिवेदिमहोदयः।









## सम्पन्ना विद्यावारिधिकार्यशाला (Ph.D. Course Work)

विश्वविद्यालयानुदानायोगस्य(U.G.C.)नियमानुसारं श्रीसोमनाथ-संस्कृतविश्वविद्यालयेन २०२२-२०२३ इति शैक्षणिकवर्षस्य कृते विद्यावारिधिप्रवेशपरीक्षायाः आयोजनम् अकारि। अस्यां प्रवेशपरीक्षायां १८ शोधार्थिनः उत्तीर्णाः अभूवन्, येषां कृते विश्वविद्यालयानुदानायोगनियमानुगुणं षष्टिहोरात्मिका विद्या-वारिधिकार्यशालाया (Ph.D Course Work) श्रीसोमनाथ-संस्कृतविश्वविद्यालयपरिसरे ०१-०५-२०२३ तः १०-०५-२०२३ यावत् समायोजिता। अस्यां कार्यशालायां १८ शोध-चिकीर्षवः उपस्थिताः आसन्। अत्र विशिष्टवक्तृरूपेण श्रीसोमनाथ-संस्कृतविश्वविद्यालयस्य प्रो. (डॉ.) ललितकुमारपटेलः, प्रो. विनोदकुमारझा, डॉ. नरेन्द्रकुमारपण्डया, डॉ. पङ्कजकुमार-रावलः, डॉ. डी.एम्. मोकरिया, डॉ. जानकीशरणआचार्यः, डॉ. योगेशकुमारपटेलः, डॉ. कार्तिकपण्ड्या च स्वविशिष्ट-



व्याख्यानेन शोधविद्यार्थिनः उद्बोधयन् । बाह्यविशिष्टवक्तृरूपेण गुजरातराज्यस्य विभिन्नस्य विश्वविद्यालयस्य विद्वांसः यथा- प्रो. देवसिंहराठवा, डॉ. रामपालशुक्लः, डॉ. भरतपटेलः, डॉ. कश्यपत्रिवेदी, डॉ. श्वेताजेजुरकर, डॉ. श्वेताप्रजापतिः, डॉ. अतुलभट्टः, डॉ. योगिनीव्यासः, डॉ. प्रीतिपञ्चोली, डॉ. चिरागराच्छः च उपस्थाय स्वविशिष्टव्याख्यानेन शोधविद्यार्थिनः उद्बोधयन्। अस्याः कार्यशालायाः संयोजनं संशोधनाधिकारी डॉ. कार्तिकपण्डया अकरोत् तथा च सहायकरूपेण कु. खुश्बुराजपोपट कार्यमकरोत्।

## सर्वजातीयसमूहलग्नस्य आयोजनम्

भारतविकासपरिषद्द्वारा वेरावलनगरे सर्वजातीयतसमूहलग्नस्य आयोजनं ०६/०५/२०२३ तमे दिनाङ्के सञ्जातम्। सहयोगिसंस्थारूपेण श्रीसोमनाथसंस्कृतविश्वविद्यालयः भागमगृह्णात्। विश्वविद्यालये प्रचाल्यमानेन परामर्शकेन्द्रेण विश्वविद्यालयस्य ब्राह्मणबालकैः मन्त्रोच्चारणेन विवाहसंस्कारः सम्पन्नः। अस्मिन् विवाहसंस्कारे आचार्यः श्रीविशालभाई जोशीवर्यः उपाचार्यश्च श्रीनीलभाई दवेवर्यः आसीत्। तथा च विवाहसंस्कारविषये एकं व्याख्यानमपि आचार्यः श्रीविशालभाई जोशीवर्यः प्राददात्।



## सम्पन्ना षाण्मासिकी-विद्यावारिधि-समीक्षा

विश्वविद्यालयानुदानायोगस्य नियमानुसारं श्रीसोमनाथसंस्कृत-विश्वविद्यालयेन तेषां विद्यावारिधिशोधार्थिनां कृते षाण्मासिकी-विद्यावारिधि-समीक्षायाः (Review of 6 Monthly Ph.D Progress Report) आयोजनं २६-०६-२०२३ तः ०१-०७-२०२३ यावत् परिसरे कृतम्। तत्र शोधार्थिनः उपस्थाय कृतं स्वसंशोधनं प्रस्तुतवन्तः। श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य प्रभारिकुलपतिः अनुस्नातकविभागाध्यक्षश्च प्रो. (डॉ.) ललितकुमारपटेलमहाभागः एवं च श्रीसोमनाथसंस्कृत-विश्वविद्यालयसञ्चालित-महाविद्यालयस्य प्रधानाचार्यः डॉ. नरेन्द्रकुमारः पण्डया उपस्थिताः आसन्। अस्याः संयोजनं संशोधनाधिकारी डॉ. कार्तिकपण्ड्या अकरोत्, सङ्कलन-कर्तारूपेण श्रीभाविनपण्ड्या तथा च सहायकरूपेण श्रीमती वैशालीवाघः कार्यमकरोत्।



## संस्कृतज्ञानवैभवम् इति गोष्ठी

संस्कृतज्ञानवैभवम् इति विषयमधिकृत्य २६/०६/२०२३ तमे दिनाङ्के सोमवासरे आभासीयमाध्यमेन श्रीसोमनाथसंस्कृत-विश्वविद्यालयः, वेरावलम् एवं संस्कृतभारती, भरुच इत्येतयोः संयुक्तोपक्रमे एका गोष्ठी आयोजितासीत्। अस्याः आरम्भः मङ्गलाचरणेन स्वागतवचोभिश्च श्रीरविवर्येणाकारि। तदनु डॉ. विदुषी बोल्लावर्यया संस्कृतज्ञानवैभवम् इति विषयमादाय संस्कृते विद्यमानज्ञानानाम्, तदन्तर्गततया विश्वविद्यालयस्य च परिचयः पी.पी.टी माध्यमेन प्रदत्तः। ततः परं विश्वविद्यालयस्य परिचयार्थं वीडियो प्रदर्शनमभूत्। उपान्ते भरुच- जनपदस्य प्रतिनिधयः डॉ. दीपक पारेखमहोदयाः प्रासङ्गिकोद्बोधनमकार्षुः। अन्ते धन्यवादज्ञापनात्परं पूर्णतामन्त्रेण गोष्ठीयं सम्पन्ना। गोष्ठ्यामस्यां मार्गदर्शकाश्च आसन् - जिलाप्रतिनिधिः डॉ. दीपक पारेखवर्यः, संस्कृताध्यापकः श्री- सञ्जयभाई पटेलमहोदयः, विश्व-विद्यालयस्य सहायिकाचार्या डॉ. विदुषी बोल्लामहोदया प्राध्यापकश्च श्रीरविरादडियावर्यः। अत्र त्रिंश-दधिकाः विद्यार्थिनः जिज्ञासवश्च संलग्नाः आसन्।

## वाक्यार्थपरिषदः षष्ठाधिवेशनस्य आयोजनम्

श्रीसोमनाथसंस्कृतविश्वविद्यालयेन २८/०६/२०२३ तमे दिनाङ्के सायङ्काले चतुर्वादनतः शैक्षणिकभवनस्य सभाखण्डे वाक्यार्थपरिषदः षष्ठाधिवेशनमायोजितम्। अस्य अधिवेशनस्य आध्यक्ष्यं समलङ्कृतवान् आसीत् – दर्शनविभागस्य सहायकाचार्यः डॉ. जानकीशरण आचार्यवर्यः। अधिवेशनेऽस्मिन् शोधपत्रचतुष्टयं पठितम्। तत्र प्रथमवक्तृत्वेन साहित्यविभागस्य सहायिकाचार्यया डॉ. प्रियङ्का द्विवेदी महोदयया 'अभिज्ञानशाकुन्तले आध्यात्मिकी




संस्कृतिः' इति विषयः बोधितः। अनन्तरं द्वितीयशोधपत्रप्रस्तोत्री पुराणविभागस्य सहायिकाचार्या डॉ. आशाबेन माढकमहोदया 'नारदभक्तिसूत्रेषु भक्तेः स्वरूपम्' इति विषयं उपस्थापितवती। ततः हिन्दीभाषायाः प्राध्यापकः डॉ. अश्विन अपारनाथी महोदयः 'छायावाद और महादेवी वर्मा' इति विषयमादाय स्वशोधपत्रमपठत्। अन्ते दर्शनविभागस्य सहायकाचार्येण डॉ. जानकीशरण आचार्यवर्येण 'आवृत्त्यधिकरणम्' इति विषयं सुष्ठु प्रतिपाद्य अध्यक्षीयोद्बोधनमकारि । अधिवेशनमदः विद्यावारिधेः छात्रः मोहितपाठकः समचालयत्।

## विश्वविद्यालयस्य शोधज्योतिरिति शोधपत्रिकायाः ई-विमोचनम्

श्रीसोमनाथसंस्कृतविश्वविद्यालयेन प्रतिवर्षं शोधज्योतिः इति शोधपत्रिकायाः प्रकाशनं विधीयते। तस्याः शोधपत्रिकायाः Website निर्माणं प्रभारिकुलपतिनः अनुस्नातकविभागाध्यक्षस्य प्रो. (डॉ.) ललितकुमारपटेलमहाभागस्य एवञ्च कुलसचिवस्य




डॉ.दशरथजादवमहोदयस्य मार्गदर्शने विश्वविद्यालयस्य संशोधन-प्रकाशनविभागेन सङ्गणकविभागेन च कृतम्। तस्य ई-विमोचनं २८-०६-२०२३ दिनाङ्के प्रभारिकुलपतिनः प्रो. (डॉ.) ललित-कुमारपटेलमहोदयस्य हस्तेन जातमासीत्।

## संस्कृतसम्भाषण-वर्गाभियानस्य आयोजनविषये गोष्ठी

श्रीसोमनाथसंस्कृतविश्वविद्यालयेन ०९ तः १५ जुलाई २०२३ पर्यन्तम् वेरावलनगरं "संस्कृतनगरम्" कर्तुम् आयोजयिष्यमाणस्य संस्कृतसम्भाषण-वर्गाभियानस्य पूर्वाजनरूपेण वेरावलस्य नागरिकैः सह एका सङ्गोष्ठी आयोजिता आसीत्। यत्र अध्यक्षरूपेण



विश्वविद्यालयस्य का. कुलपतिः प्रो.ललितकुमारपटेलमहोदयः, कुलसचिवः डॉ. दशरथजादवः, वेरावलपाटणसंयुक्तनगरपालिका-प्रमुखः श्रीपीयूषभाई-फोफण्डी, श्री गिरीशभाई कारिया, वैद्यः डॉ. जयेश वघासिया, श्री पुनीतभाई महेता, प्राचार्या डॉ. स्मिताबेन छग महोदया इत्याद्याः विंशत्यधिकाः नागरिकाः उपस्थिताः आसन्। सर्वैः वेरावलनगरे संस्कृतस्य प्रचार-प्रसाराय संस्कृतसम्भाषण-वर्गाभियानस्य विषये महत्त्वपूर्णाः सूचनाः प्रदत्ताः। आगामिदिवसेषु वेरावलस्य सोमनाथस्य च पञ्चविंशत्यधिकेषु स्थानेषु संस्कृतसम्भाषण-वर्गाणाम् आयोजनं विश्वविद्यालयेन करिष्यते। एतस्याः गोष्ठ्याः संयोजनं संस्कृतसंवर्धनसमितेः अध्यक्षः डॉ. जानकीशरण आचार्यः अकरोत्।

## संस्कृत-प्रचार-प्रसारः

श्रीसोमनाथसंस्कृतविश्वविद्यालये प्रचाल्यमानानां जनोपयोगिनां विभिन्नपाठ्यक्रमाणं प्रचार-प्रसाराय विश्वविद्यालयस्य विविधैः अध्यापकैः विभिन्नेषु विद्यालयेषु महाविद्यालयेषु गत्वा प्रचार-प्रसारकार्यं विहितम्। एतस्मिन् वर्षे विश्वविद्यालये शास्त्री (B.A.),



आचार्यः (M.A.), डिप्लोमा इत्यादिभिः पारम्परिकपाठ्यक्रमैः सह "एम.ए. इन हिन्दू स्टडीज्", "एम.ए. इन जनरल संस्कृत", "पी.जी. डिप्लोमा इन टेम्पल मैनेजमेंट", "P.G. डिप्लोमा इन टूरिझम" इत्यादिविषयेषु राष्ट्रियशिक्षानीतिः २०२० आधारिताः नूतनाः पाठ्यक्रमाः निर्मिताः। एतस्मिन् प्रचारकार्ये विश्वविद्यालयस्य विविधाः अध्यापकाः कार्यम् अकुर्वन्।

## छात्राणाम् उपलब्धयः

श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य योगाचार्यस्य द्वितीयवर्षे अधीयानः सोढा-अनिरुद्ध-नामकः छात्रः राजस्थानद्वारा NAPS केन्द्रे आयोजितायां प्रतियोगितायां जानुशिरासने प्रथमस्थानं प्राप्य Yoga Book of Records मध्ये स्वनामोल्लेखनं कारितवान्। एषः छात्रः पुनः अन्ताराष्ट्रिययोगदिवसे आयोजितायां विश्वसांसदयोगस्पर्धायां स्वर्णपदं प्राप्तवान्। तस्मै विश्वविद्यालयपरिवारपक्षतः वर्धापनानि विज्ञाप्यन्ते।



गीर-सोमनाथजनपदस्य युवमहोत्सवान्तर्गते आयोजितायां वक्तृत्वस्पर्धायां श्रीसोमनाथसंस्कृतविश्वविद्यालये आचार्यद्वितीय-वर्षे सर्वदर्शनविषये अधीयानः छात्रः गौरव डोडिया प्रथमं स्थानं लब्ध्वा पञ्चसहस्ररूप्यकाणां पुरस्कारं प्राप्नोत्। तस्मै विश्वविद्यालयपरिवारपक्षतः वर्धापनानि विज्ञाप्यन्ते।

## महाविद्यालय-वार्ताः

### बी. ए. पी. एस. स्वामिनारायणसंस्कृतमहाविद्यालयः सारङ्गपुरम्

मे-मासे तथा च जूनमासे साहित्यम्, व्याकरणम्, न्यायः, कर्मकाण्डं चाधारीकृत्य नानाविषयककार्यशालानां आयोजनमभवत्। कार्यशालोपक्रमे दिनाङ्क २६/०५/२०२३ तः दिनाङ्क ३०/०५/२०२३ पर्यन्तं साहित्यविषयस्य अध्ययनमभवत्। तस्मिन् अध्यापयितुं साहित्यविषयस्य मूर्धन्यविद्वान् ब्रह्मर्षिसंस्कृत- महाविद्यालयस्य प्रधानाचार्यः डॉ. अमृतलाल-भोगायतामहोदयः समागच्छत्। तेन साहित्यविषयस्य प्रसिद्धग्रन्थौ काव्यप्रकाश रघुवंशं च पाठितौ। अपि च स्वरचितग्रन्थौ कर्णकर्णामृतं तथा अन्योक्तिकाव्यशतकमपि आस्वादयत्। कार्यशालाद्वारा छात्रैः साहित्यविषयस्य विशिष्टज्ञानं



गहनता च प्राप्ता।

तत्पश्चात् दिनाङ्क १३/०६/२०२३ तः दिनाङ्क २४/०६/२०२३ पर्यन्तं नव्यन्यायः तथा च नव्यव्याकरणम् इति विषयौ आश्रित्य कार्यशाला आयोजिता। अध्ययनविभागस्य प्राध्यापकः न्यायशास्त्रस्य च पारम्परिकविद्वान् डॉ. विश्वनाथधितालः समागात्। न्यायबोधिनी, पञ्चलक्षणी सामान्यनिरुक्तिरादिग्रन्थाः डॉ. विश्वनाथधितालगुरुणा पारम्परिकरीत्या पाठिताः तथैव आचार्यगोविन्दपान्डेमहोदयः व्याकरणे महाभाष्यम्, सिद्धान्त-कौमुदीम् अपि च सन्धि-प्रकरणम् इत्यादि विषयान् पाठितवान्। कार्यशालायाः अन्तिमदिने गुरूणां पुरतः छात्रैः शास्त्रार्थः प्रस्तुतः। शास्त्रार्थप्रस्तुतिम् अवलोक्य डॉ. विश्वनाथधितालः अपि च आचार्यगोविन्दः प्रासीदताम्।

तदनन्तरं २१/०६/२०२३ तः २३/०६/२०२३ दिनाङ्कपर्यन्तं कर्मकाण्डविषयस्य कार्यशाला अभवत्। तत्र वेठपाठिविद्वान् श्रीजीज्ञेशमहोदयाः आगच्छन्। तैः कर्मकाण्डस्य शुक्लयजुर्वेदीय-स्वरमन्त्रगानं प्रशिक्षितम्।

### श्रीमुक्तानन्द-संस्कृत-महाविद्यालयः, मगोध

१. **वार्षिकपरीक्षाकार्यक्रमः नवरात्रमहोत्सवश्च -** अप्रैलमासे वसन्तनवरात्रम् आचरितम् अस्माभिः। अत्र नवदिवसपर्यन्तं प्रातः दुर्गासप्तशत्याः पाठः तथा च सायं काले ललितासहस्रनामभिः अर्चनं विहितम्।




२. **सुगम-सङ्गीत-सांस्कृतिककार्यक्रमः -** मईमासे “साहित्यम्, सङ्गीतम्, कला” इति त्रिगुणैरलंकृतो मानवः समाजे प्रतिष्ठितो भवति। जीवनं रसमयं कर्तुमपि एते गुणाः आवश्यकाः भवन्ति। अत्र अस्माकं विद्यालये संगीतस्य एकः विभागः वर्तते अत्र प्रवेशिकातः विशारदपर्यन्तं छात्राः अध्ययनं कुर्वन्ति। मईमासस्य १२ तः १४ दिनाङ्कपर्यन्तं सुगमसंगीतस्य शिबिरकार्यक्रमः आयोजितः।

३. **प्रवेशोत्सवः विश्वयोगदिवसश्च -** जूनमासस्य पञ्चमदिनाङ्के महाविद्यालयस्य नूतनसत्रारम्भः सभाजितः तत्रैव नूतन छात्राणां प्रवेशोऽपि जातः। प्रथमा-प्रथमवर्षे द्विचत्वारिंशत् छात्राः तथा मध्यमा-प्रथमवर्षे सप्त छात्राः तथा च शास्त्रिकक्षायामपि एकः

छात्रः आहत्य पञ्चाशत् नूतनछात्राः प्रवेशं प्राप्तवन्तः। अस्यैव मासस्य एकविंशे दिनाङ्के विश्वयोगदिवसः अपि अस्माभिः आचरितः। तत्र विशिष्य आचार्यपूर्णानन्दशर्मामहोदयस्य निर्देशने एकविंशतिः छात्राः त्रयः आचार्याः मिलित्वा वलसाडनगरे योगप्रदर्शनं कृतवन्तः। मासेऽस्मिन् एव जनपदस्तरे बोर्डपरीक्षायां प्रथम-द्वितीय-तृतीय स्थानमलंकुर्वतां छात्राणां सम्मानकार्यक्रमः आसीत्। तत्फलम् अस्माकं महाविद्यालयस्य त्रिभिः छात्रैरपि अलभत। अस्मिन्नैव प्रसङ्गे किल्लापारडी स्थानके सातवलेकर-संस्कृत-महाविद्यालयद्वारा समग्र वलसाडजनपस्थ उत्तमाङ्काः प्राप्तानां छात्राणाम् एकविंशे दिनाङ्के एव सम्माननमभवत्। तत्र श्रीमुक्तानन्द-संस्कृत-महाविद्यालयस्य सप्तदश छात्राणां सम्माननं जातम्।

### BAPS स्वामिनारायण-संस्कृत-महाविद्यालयः, सारङ्गपुरम्

०५/०६/२०२३ तः ०८/०६/२०२३ दिनाङ्कपर्यन्तम् – पूर्णप्रज्ञाशोधसंस्थाद्वारा आयोजितायाम् अन्ताराष्ट्रियरामायण-सङ्गोष्ठ्यां बी.ए.पी.एस् स्वामिनारायणमहाविद्यालयस्य छात्राः आमन्त्रिताः आसन्। तत्र अष्टचत्वारिंशच्छात्राः चर्चासत्रं गत्वा उपस्थिताः आसन्।

### ब्रह्मर्षिसंस्कृतमहाविद्यालयः – नडियाद

ब्रह्मर्षिसंस्कारधाम्नि २१/०५/२०२३ तमे दिनाङ्के पद्मश्री डाह्याभाई शास्त्रिवर्याणाम् आशीर्वादेन तथा आचार्याणां श्रीमताम्



अमृतलाल भोगायता वर्याणां मार्गदर्शनेन नूतनच्छात्राणां प्रवेशविधिः सम्पन्नः। अस्मिन्नवसरे श्रीअश्विनभाई दवे, श्रीसञ्जयभाई उपाध्यायः, ब्रह्मर्षिसंस्कृतमहाविद्यालयस्याध्यापकाः, कार्यकर्तारः, १२५ नूतनच्छात्राः च उपस्थिताः आसन्।

नूतनच्छात्रप्रवेशोत्सवः ब्रह्मर्षिसंस्कृतमहाविद्यालये ०८/०६/ २३ तमे दिनाङ्के प्रवेशपरीक्षाम् उत्तीर्य ये छात्राः प्रवेशाय अर्हाः तेषां प्रवेशः आसीत्। अस्मिन् नूतनेभ्यः छात्रेभ्यः आशीर्वचनानि प्रदातुं ब्रह्मर्षिसंस्कृतमहाविद्यालयस्य प्रधानाचार्यः डॉ. अमृतलाल भोगायता, ब्रह्मर्षिसंस्कृतमवहाविद्यालयस्य शिक्षककार्यकर्तारश्च उपस्थिताः आसन्।

विश्वयोगदिवसः - सम्पूर्णविश्वे भारतदेशात् प्रेरणां स्वीकृत्य योगदिवसम् अनुमानयन्ति सर्वे जनाः। अतः २१/०६/२०२३ तमे दिनाङ्के सन्तराममन्दिरस्य प्राङ्गणे सङ्गीतेन सह योगस्य विविधाः प्रयोगाः कृताः ब्रह्मर्षिसंस्कृतमहाविद्यालयस्य छात्रप्राध्यापकैश्च। कार्यक्रमान्ते सन्तराममन्दिरस्थितैः महाराजरामदासमहाराज्ञैः योगस्य महत्त्वं प्रवचनैः कथितम्। कार्यक्रमान्ते मधुजलेन 'मधुरेण समापयेत्' इति सूक्तिः सार्थकीकृता।



ब्रह्मर्षिसंस्कारधाम्नि २६/०६/२०२३ तमे दिनाङ्के महाराष्ट्र-राज्यात् बोलिवुडविभागस्य सङ्गीतकारः हिमेश रेशमीया सपरिवारं ब्रह्मर्षिसंस्कारधाम्नः दर्शनाय आगच्छत्। अत्रागत्य तेन पद्मश्री डाह्याभाई शास्त्रिणां दर्शनं कृत्वा आशीर्वादाः स्वीकृताः। तेन ब्रह्मर्षिसंस्कृतमहाविद्यालयस्य नर्मदेश्वरमहादेवस्य गोशालायाः दर्शनम् अपि कृतम्।

शास्त्रपण्डितपुरस्कारः – श्रेष्ठग्रन्थपुरस्कारः च - १९/०६/२०२३ ब्रह्मर्षिसंस्कृतमहाविद्यालयस्य प्रधानाचार्यः डो. अमृतलाल भोगायता महोदयः गुजरातसाहित्य-अकादमी-गांधीनगरेण शास्त्रपण्डितपुरस्कारेण तथा श्रेष्ठग्रन्थपुरस्कारेण पुरस्कृतः। एतदर्थं पद्मश्री डाह्याभाई शास्त्रिभिः अभिनन्दनानि प्रदत्तानि। एतां सिद्धिं दृष्ट्वा खेडाजनपदस्य शिक्षणाधिकारी श्रीकमलेशभाई पटेल महोदयः अपि विद्यालयम् आगत्य प्रधानाचार्याय डो. अमृतलाल भोगायता महोदयाय विशिष्टाभिनन्दनानि प्रदत्तवान्।

गुजरातसाहित्य-अकादमी द्वारा २८/०६/२०२३ तमे दिनाङ्के फोरेन्सिकविश्वविद्यालय-गांधिनगरे गुजरातराज्यस्य मुख्य-मन्त्रिणां श्रीभूपेन्द्र पटेल महाभागानाम् उपस्थितौ गुजरातसाहित्यपुरस्कार-कार्यक्रमे ब्रह्मर्षिसंस्कृतमहाविद्यालयस्य



छात्राः श्रोतृरूपेण आहूताः गुजरातसर्वकारेण। कार्यक्रमम् अनुभूय छात्राः गांधिनगरस्थितस्य अक्षरधाममन्दिरस्य दर्शनं अपि कृतवन्तः।

## सूर्यपुरसंस्कृतपाठशाला - सूरतमहानगरम्

सूर्यपुरसंस्कृतमहाविद्यालयस्य छात्राणां तथा च डॉ.पुनीतभाई शीलुमहोदयानां सहाय्येन वीरनर्मददक्षिणगुजरातविश्वविद्यालये श्रीमहामहिमराज्यपालमहोदयामुपस्थितौ अस्माकं उपनिषत्प-रम्परानुरूपं दीक्षान्तसमारोहः सम्पन्नोऽभवत्। तैत्तरीयोपनिदः शिक्षावल्यनुगुणं दीक्षार्थिभिः छात्रैः छात्राभिश्च उपदेशः स्वीकृतः आसीत्। राज्यपालमहोदयाः तु शिक्षावल्लीं श्रुत्वा तदनुगुणं नैजमुद्बोधनं प्रायच्छन्, अपि च संस्कृतस्य पाठशालायाश्च प्रशंसा विहितासीत्।



विद्यारम्भे गुरुः श्रेष्ठः इति ज्योतिषशास्त्रानुसारं सूर्यपुर- पाठशालायां लब्धप्रवेशानां छात्राणां कृते प्रवेशोत्सवः समायोजितः आसीत्। इयं पाठशाला १९०१ वर्षतः समाजश्रेष्ठिनां सर्वकारस्य अनुदानेन च संस्कृतसेवायां वर्तते। अत्र छात्रेभ्यः भोजनावासाभ्यां सह निःशुल्कं संस्कृतशास्त्रं पाठ्यते। अस्मिन् शुभावसरे प्रधानाचार्याध्यापकैश्च छात्रेभ्यः पुस्तकवितरणं कृत्वा तिलकार्चनेन स्वागतं कृतमासीत्। डॉ. कान्तिभट्टमहोदयैः शास्त्राध्ययनकृतनिश्चयेभ्यो छात्रेभ्यः अभिभावकेभ्यश्च शुभकामना प्रदत्तासीत्।

## विश्वविद्यालये महानुभावानाम् आगमनम्

~ 16/06/2023 तमे दिनाङ्के मान्यानां प्रधानमन्त्रिणां श्रीनरेन्द्रमोदिमहोदयानां नेतृत्वे केन्द्रसर्वकारस्य नववर्षेषु प्राप्तसिद्धीनां विषये "जनसम्पर्कतः जनसमर्थनम्" इति अभियाने गुजरातसर्वकारस्य मन्त्रिभिः माननीयैः मुळुभाईबेरावर्यैः कृतकार्याणां परिचयः प्रदत्तः। अत्रावसरे कुलपतिः प्रो.



ललितकुमार पटेलः, कुलसचिवः डॉ. दशरथ जादवः तथा च गीर-सोमनाथस्य अधिकारिणः अध्यापकाश्च उपस्थिताः आसन्।

~ ०७/०६/२०२३तमे दिनाङ्के श्रीसद्गुरुसंस्कृतमहाविद्यालयस्य प्राध्यापकाः १२० सङ्ख्यकाः ऋषिकुमाराश्च विश्वविद्यालयम्



अगमन्। तेषां स्वागतं माननीयकुलपतिभिः विहितम्, ततः परं विश्वविद्यालये प्रवर्त्तमान-अभ्यासक्रमाणां NEP 2020, SSIP इत्यस्य च परिचयः कारितः।

~ ०५-०५-२०२३ तमे दिनाङ्के माननीयः कुलपतिमहोदयः प्रो. ललितकुमारपटेलः केन्द्रियसंस्कृतविश्वविद्यालय-नवदेहली,



श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालय-नवदेहली, राष्ट्रियसंस्कृतविश्वविद्यालय-तिरुपतिः इत्येतेषां संयुक्तोपक्रमे आयोजिते उत्कर्षमहोत्सवे मुख्यातिथिरूपेण उपस्थितः भूत्वा विशिष्टं व्याख्यानं कृतवान्।

~ २८-०४-२०२३ दिनाङ्के पुरीस्थे श्रीजगन्नाथसंस्कृत-विश्वविद्यालये "राष्ट्रियशिक्षानीतिः-२०२०" अनुसारेण



नूतनस्नातकपाठ्यक्रमस्य सन्दर्भे आयोजितायां सङ्गोष्ठ्यां माननीयः कुलपतिः प्रो. ललितकुमारपटेलः मुख्यवक्तृत्वेन उपस्थितः आसीत्।

~ सौराष्ट्रतमिळसङ्गमान्तर्गततया २६/०६/२०२३ तमे दिनाङ्के सौराष्ट्रीयन-तमिल-ऐसे-विनायक-मिशन- युनिवर्सिटी, सालेम इत्यस्य पूर्वकुलपतिभिः प्रो. डॉ.वी. आर. राजेन्द्रन्-वर्यैः एवं राजीव-गान्धि-युनिवर्सिटी ऑफ हेल्थ सायन्स इत्यस्य



अधिकारिभिश्च डॉ. बी. ए. विश्वनाथवर्यैश्च सह अन्यमहानुभावाः विश्वविद्यालये समागतवन्तः। विश्वविद्यालयस्य कुलपतयः कुलसचिवाश्च विश्वविद्यालये क्रियमाणगतिविधीन् सिद्धीश्च बोधितवन्तः।

~ भारतसर्वकारस्य मन्त्रिमहोदयाः श्री अनिलभाई रादड़िया महाभागाः तथा च श्रीसागर महाभागाः अस्मद्विश्वविद्यालये आगत्य मेलनं कृतवन्तः। अत्रावसरे माननीयकुलपति-कुलसचिवाभ्यां विश्वविद्यालयकार्याणां विवरणं दत्त्वा तेषां



सम्माननं कृतम्।

~ 22/06/2023 तमे दिनाङ्के श्रीसद्गुरुसंस्कृतमहाविद्यालयस्य प्राध्यापकाः ऋषिकुमाराश्च विश्वविद्यालयम् अगमन्। तेषां स्वागतं



माननीयकुलपतिभिः विहितम्, ततः परं विश्वविद्यालये प्रवर्त्तमान-अभ्यासक्रमाणां परिचयः कारितः।

~ विख्यातकथावाचकानां श्रीमुरारीबापूमहोदयानाम् उपस्थितौ आयोजिते श्रीगोविन्दगुरुविश्वविद्यालयस्य पदवीदानसमारम्भे श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य माननीयकुलपतिः अपि अतिथित्वेन उपस्थितः आसीत्। अत्रावसरे द्वयोः विश्वविद्यालययोः मध्ये संस्कृतसंरक्षण-संवर्धनविषये अभिबन्धः (MoU) जातः।




श्रीमुरारीबापूमहोदयाः अपि एतस्मिन् विषये तथा च विश्वविद्यालयस्य कार्याणां विषये प्रसन्नतां प्रकटितवन्तः।

## अध्यापकानाम् उपलब्धयः

### - डॉ. जानकीशरण आचार्यः

१. ०५-०६ अप्रैल २०२३ - के. सं. वि. नवदेहलीद्वारा प्रायोजिते शोधप्रकल्पे मातृकाग्रन्थ-तत्सम्बन्धिसाहित्यसङ्ग्रहणाय प्राच्यविद्यामन्दिर-एम.एस.विश्वविद्यालय-वडोदरां गत्वा शोधसामग्र्याः सङ्कलनम्।

२. २५ अप्रैल २०२३ - जोषीचिन्तन इति स्वीयशोधच्छात्रस्य प्रि.पीएच.डी.वाइवा इत्यत्र शोधमार्गदर्शकत्वेन उपस्थितिः।

३. विश्वविद्यालयस्य 'सोमज्योतिः' इति त्रैमासिकवार्ता-पत्रिकायाः ३५तमस्य अङ्कस्य सम्पादनं विहितम्।

४. ०१-०२ मई २०२३ - श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य विद्यावारिधिकार्यशालायां (Ph.D. Coursework-2023) इत्यत्र "भारतीयलेखनकला तथा च लिपीनां परिचयः", "तुलनात्मकं संशोधनम्", "दर्शनम् - व्याख्या, प्रकृतिः, अवकाशः एवं भेदाः" इति विषये आमन्त्रितानि त्रीणि व्याख्यानानि दत्तानि।

५. ०४-०५ मई २०२३ - गुजरात-साहित्य-अकादमीद्वारा आयोजितायां "षोडशसंस्कारः" इत्याख्यायां द्विदिवसीयायां राष्ट्रियकार्यशालायां भागं गृहीत्वा "विवाहसंस्कारः अग्निहोत्रं गृहस्थाश्रमकर्तव्यानि च" इति विषये व्याख्यानं दत्तम्।

६. ११ मई २०२३ - श्रीसोमनाथसंस्कृतविश्वविद्यालयेन आयोजितायां R.D.C. इति गोष्ठ्यां शोधमार्गदर्शकत्वेन उपस्थितिः।

७. २२ जून २०२३ - श्रीसोमनाथसंस्कृतविश्वविद्यालयेन आयोजितायां "कार्यदक्षता" इति कार्यशालायां भागग्रहणम्।

८. २७ जून २०२३ - श्रीसोमनाथसंस्कृतविश्वविद्यालये वाक्यार्थपरिषदः षष्ठाधिवेशने अध्यक्षत्वेन उपस्थाय "आवृत्त्यधिकरणम्" इति विषये वाक्यार्थः प्रस्तुतः।

### - डॉ प्रियंका द्विवेदी



गुजरात-संस्कृत-साहित्याकदमी-गान्धिनगरद्वारा १९-०६-२३ दिनाङ्के **डॉ प्रियंका द्विवेदी** (सहायकप्राध्यापिका श्रीसोमनाथसंस्कृत-विश्वविद्यालयः) २०२० वर्षीयेण संस्कृत- कुटुम्बसम्मानेन सभाजिता।

### - श्रीप्रियाङ्कः ठाकरः



श्रीसोमनाथसंस्कृतविश्वविद्यालये गुजराती-भाषाविषयकः प्राध्यापकः **श्रीप्रियाङ्कः ठाकरः** "गुजरातीमां अनुदित नवलकथाओ" इति विषये सौराष्ट्रविश्वविद्यालयात् विद्यावारिधिः इति उपाधिं प्राप्तवान्।

